जठरादोषसंयुक्तं दंष्ट्रिणोऽ(ग्निम)[ग्निर्भ]यं भवेत् ।
शबल[ा] दोषसंयुक्तं भूषणाय(ा)(नि)[न] धारयेत् ॥ 31

सदो[षे](:) पद्मरागे तु यथा मूल्यं तु हीयते ।
तथा मरकते मूल्यं हीयते दोष(वर्ण)[दर्श]नात् ॥ 32

स्निग्धे चतुर्धा जातौ च लक्षे दोषं विवर्जयेत् ।
निस्तेजसि वपा वै........शूद्रे चाष्टमता मता ॥ 33

कृत्रिमत्वं य(वा)[दा]रत्ने शक्यते सुरभिः कचित् ।
घर्षयेत्प्रस्तरे रत्नं काच(तत्कवि)[स्तस्माद्धि] पद्यते ॥ 34

लेखयेल्लोह(शीर्षे तु)[शृङ्गेण](अथ तूर्णेन)[चाथ शृङ्गेण]लेपयेत् ।
सहजः कान्तिमायाति कृत्रिमो मलिनो भवेत् ॥ 35

इति **श्रीरत्नदीपिकायां**

**मरकतलक्षणकथनं नाम**

**पञ्चमं ज्योतिः ॥**

---

## —षष्ठं ज्योतिः—

॥ अथ गोमे(ध)[द]परीक्षा ॥

स्वच्छकान्तिर्गुरुस्स्निग्धो वर्णाढ्यो बहुभिर्वरः । (?)
धवलः पि(शिरो)[ञ्जलो] धन्यो गोमे(ध)[द](ईरितः)[इति विश्रुतः] ॥ 1

चतुर्धा जातिभेदैस्तु गोमे(धो)[दो]ऽपि प्रकीर्तितः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति यथाक्र(मात् )[मम् ] ॥ 2

यथा जीवित(रत्नसारे)[रत्नाकरे]—

आहोचितं वराहश्च य(द्र)[त्र] गोमेदलक्षणम् ।
मधुबिन्दुसमच्छायं गोमूत्रच्छवि निर्मलम् ॥ 3

गोमेदकं तथा(क्षा)[ख्या]तं रत्नं सर्वगुणावहम् ।
द्विच्छायं लघु रूक्षाढ्यं पाटलं नि(ष्ट)[ष्प्र]भं त्यजेत् ॥ 4

**अथ तद्गुणाः—**

गोमेदं कफ(पीत)[पित्त]घ्नं क्षयपाण्डु वि(सा)[षा]पहम् ।
रुच्यं वह्निकरं(च्छि)[स्वि]न्नं रोचनाभिर्विशुध्यति ॥ 5

प्रवा(लो)[ले] रजतं मूल्यं गोमे(दो)[दे]ऽपि तथैव च ।
वैडूर्ये पुष्परागे च मूल्यं स्वर्णसमं भवेत् ॥ 6

इति **श्रीरत्नदीपिकायां**
गोमेदलक्षणं नाम
षष्ठं ज्योतिः ॥

---

## —सप्तमं ज्योतिः—

॥ मणिगुणकथनम् ॥

**अथ स्फटिकपरीक्षा—**

स्फटिकं दाडिमीबीजमशोकमधुवर्णकम् ।
काम्बोजरत्नगन्धाढ्यं स्फटिकं च त्रिरङ्गकम् ॥

**तद्दोषाः—**

तत्त्वसारं नीलवर्णं निष्प्रभं च त्यजेद्बुधः ।

**[अथ भस्माङ्कमणिः]—**

पीत[:] श्याम[:] समस्स्निग्धः शिलारेखासमन्वितः ॥ 2

भस्माङ्क इति ख्यातः कथितो मणिरुत्तमः ।

**अथ गारुडो (जा)[द्गा] रपरीक्षा—**

बहुपीतः(शिवः)[सितः] श्यामै (रुत्पीतः)[रपीतो] बिन्दुवर्जितः ॥ 3

स भवेद्गारुडो(जा)[द्गा]रः पीतश्यामरुचिर्मणिः ।

**अथ तार्क्ष्यमणिः—**

हरि(क([द्र]र्णो गुरुः स्निग्धो वह्निवत्तार्क्ष्य उत्तमः ॥ 4

विकटं निष्प्रभं नीलं पीतं तार्क्ष्यं परित्यजेत् ।

**अस्य गुणाः—**

ज्वरच्छेदी वि(श्व)[ष] ज्वालासन्निपाताग्नि(मन्द)[मान्द्य]कृत् । 5

**अथ गरुडमणिः—**

पक्वजम्बूफलाकारः स्निग्धकान्तिसमन्वितः ।
शुक्लरेखान्वितः पश्चात्स्वच्छः स्याद्गरुडो मणिः ॥ 6

**अथ आस्तिकमणिः—**

यस्तोयं लोहितं कुर्यादन्ते वर्णचतुष्टयम् ।
आस्तिक्यं वंशजातोऽसौ मणिः सर्वविषापहः ॥ 7

**अथ सुवर्णरेखामणिः—**

लोहितो वर्तुलः स्निग्धः शुक्लरेखासमन्वितः ।
मणिः सौवर्णरेखाख्यो ज्ञेयः सर्वविषापहः ॥ 8

इति **श्रीरत्नदीपिकायां**

मणिगुणकथनं नाम

सप्तमं ज्योतिः ॥

---

## —अष्टमं ज्योतिः—

॥ वैडूर्यपुष्परागमणिगुणकथनम् ॥

**अथ वैडूर्यपरीक्षा—**

मार्जार(मेद्र)[नेत्र] सङ्काशं रसाण[ल]प्रतिमं हि वा (?) ।
कठिनं निर्मलं पुण्यं वैडूर्यमेव मङ्गलम् ॥ 1

शुकपुच्छच्छाविसमः कोकिला(क्ष च)[ण्ठ्यश्च] सम्मत(म्)[ः] ।
शिखिकण्ठाकृतिः कश्चित् वैडूर्यो मणिरुत्तमः ॥ 2

वैडूर्यं श्यामपुच्छाङ्गं सुस्वच्छं स्फटिकप्रभम् ।
उत्तरीयेण हरितं श्यामलं(न च)[च न] शोभितम् ॥ 3

**अथ गुणाः—**

वैडूर्यं(कफपीत)[रक्तपित्त] घ्नं प्रतिज्ञाबलवर्धनम् ।

**अथ पुष्परागपरीक्षा—**

बाणपुष्पसमः कान्तः स्वच्छभावः कचिद्गुणः ॥ 4

पुत्रदो धनदः पुण्यः पुष्परागमणिर्भवेत् ।
पुष्परागं गुरु स्निग्धं कर्णिकारसमप्रभम् ॥ 5

कर्कशं पीतकृष्णं च वर्जितं रत्नपण्डितैः । 5½

॥ इति **श्रीरत्नदीपिकायां**

(उपरत्नलक्षण) [वैडूर्यपुष्परागमणिगुण] कथनं नाम

अष्टमं ज्योतिः ॥

———

## —नवमं ज्योतिः—

॥ अथ प्रवालपरीक्षा ॥

याव (ब) द्बन्धूकसिन्दूरदाडिमीकुसुमप्रभम् ।
स्निग्धलोहितलेखं च तं प्रवालम (णिद्युतिः) णिं विदुः ॥ 1

शोणिता(क्षं)[ख्यं] यदा गच्छेत् प्रयत्नात्कथिने सति ।
प्रवालं नाम तद्रत्नं शमकं शोकनाशनम् ॥ 2

पक्वबिम्बसमच्छायं निर्मल विद्रुमं समम् ।

**अस्य दोषाः—**

पाण्डुरं सर्वरूक्षत्वं वक्रं लघु च नेष्यते ॥ 3

**अस्य गुणाः—**

क्षय(पीता)पित्ताम्लवातघ्नं विषघ्नं पाच(नं)[कं] लघु ।
विद्रुमं निर्मलं स्विन्नं सर्वदोषरुजापहम् ॥ 4

इति **श्रीरत्नदीपिकायां**

(उपरत्न)[प्रवाल] लक्षणकथनं नाम

नवमं ज्योतिः ॥

---

निर्दोषं यदि वज्रकं खलु भवेद्विप्रः परं सिद्धिदो
मृत्युः क्षत्रिय उत्तमः क्षयसशंदत्ते च वैश्यस्तथा ।
शूद्रो हन्ति रुजाकरं खलु तथा वीर्यं च सर्वे क्रमा-
द्विप्रक्षत्रियवैश्यशूद्रविषये यो या नरैः पण्डितैः ॥ 1

वज्रं चेन्न तु काकपादसहितं मृत्युं ददाति ध्रुवं
पुत्रं हन्ति च रक्तबिन्दुसहितं निर्मातिं नो मङ्गलम् ।
रेखाबिन्दुसमायुतं यदि भवेत् तन्निष्फलं गीयते
सर्वैश्शास्त्रविशारदैर्यदि भवेद्वैश्यैस्तु दोषैर्युतः ॥ 2

दन्ते च्छेदमणिः श्रियं क्षपयति स्तम्बेरमाख्योन्नतां
शूद्रश्चेत्किल तादृशः क्ष[प]यति(ल)[ ]क्ष्मायुर्धनानि ध्रुवम् ।
भग्नस्स्याद्यदि विद्रुमो विति नृणां नो मङ्गलामङ्गलं
तत्वे दूषितमातनोति सकलं व्याधिं ततः शोधयेत् ॥ 3

निर्दोषं द्युतिमौक्तिकं क्ष[प]यति(पृग) व्याधिं विषघ्नं भवेत्
वीर्यतादिति सारकं भवति त(था)द्धन्ति क्षयाख्यं गदम् (?) ।
माणिक्यं सगुणं ददाति (द)[म]नुजस्य भाग्यमावश्यकं
तत्त्वे दोषयुने करोति च भयं त्रिन्तायशोकं तथा ॥ 4

दारिद्र्यं च तथाऽपकीर्तिमपि चेन्नीलं च दोषैर्युतं
दारिद्र्यं विदधाति (श)[जा] तु कलहं निष्कान्तिभावं तथा ।
देशत्यागमणिर्ध्रुवं वितनुते कृष्णं विचित्रं तथा
त्रासञ्चैव गरुन्मणिर्यदि भवेद्दोषैस्समस्तैर्ध्रुवम् ॥ 5

रोगाद्रक्षति नैव नृन् खलु तथा धाता विधत्ते नृणां
दुःखं व्याघ्रकृशानुभीश्च मरणं चा(शौ)[सो] युतश्चेद्गुणैः(?) ।
दत्ते दिव्यधनं ददाति च महा........विषन्नो भवेत्
धन्यो मण्ड(ल)[न] मुत्तमं यदि भवेद्गोमेदकः सद्गुणः ॥ 6

पाण्डुं हन्ति कफं च पित्तमधिकं घोरं विषं च क्षयं
दत्ते कान्तिमपि ध्रुवं वितनुते नृणां विचण्डाननम् ।

पुण्यं सत्तनुजं धनं च तनुते यत् पुष्यरागं नृणां (?)
वैडूर्यं खलु रक्तपित्तशमकं दत्ते प्रतिज्ञाबलम् ॥ 7

नृणां विद्रुममुत्तमद्युति विषं चाम्लं च पित्तं क्षयं
वातं हन्ति करोति पाकमधिकं दत्ते च कान्तिं ध्रुवम् ।
सर्वांसां नवपूर्वरत्नकरुचं शर्मप्रदं च ध्रुवं
धार्यं तद्गुणसंश्रितं खलु सदालङ्कारमाणं जनैः ॥ 8

सू(र्यो)[र्ये] पङ्कजरागमिन्दुविषये मुक्ता कुजो विद्रुमं
पालाशं खलु रत्नमिन्दुतनुजः तत्पुष्यरागो गुरुः (?) ।
नीलं चैव शनैश्चरस्य विषयं राहुश्च वैडूर्यकं
शुक्रो वज्रमपि सुतं च विहितं केतौ च गोमेदकम् ॥ 9

इत्येवं नव कीर्तितानि मुनिभिः रत्नानि सर्वग्रह—
प्रीत्यै व्यासवराहनारदमुखैः सर्वज्ञभावं गतैः । 9½

## श्री चण्डेश्वरकृता

रत्नदीपिका

समाप्ता ॥

---

श्रा:

बुद्धभटीयं नाम

# ॥ रत्नशास्त्रम् ॥

## ॥ बुद्धभटप्रणीतम् ॥

(रत्न)[मूर्ति]त्रयाय भुवनत्रयवन्दिताय
कृत्वा नमस्समवलोक्य च रत्नशास्त्रम् ।
रत्नप्रवेकमधिकृत्य विमुच्य फल्गून्
संक्षेपमात्रमिति **बुद्धभटेन** दृष्टम् ॥ 1

भुवनत्रितयाक्रान्तप्रकाशीकृतविक्रमः ।
बलो नामाभवच्छ्रीमान् दानवेन्द्रो महाबलः ॥ 2

असकृत्संयुगे येन भज्यमाने दिवस्पतौ ।
नोदुवाह शची वीरपत्नी गर्वोन्नतं शिरः ॥ 3

अशक्नुवद्भिर्निर्जेतुं तं युद्धे युद्धशालिनम् ।
वरव्याजेन पशुतां प्रार्थितस्स मुरैर्मखे ॥ 4

सासिकानां स सत्त्वस्य वरं प्रत्यादिशद्वशी । (?)
शौण्डीर्यमानी विबुधांस्तथेति प्रत्यपद्यत ॥ 5

धैर्यादगणितप्राणपरित्यागार्तिसंभ्रम ।
पशुवत्सोऽपि शस्तस्तैस्स्ववाक्याशनिबन्धनः ॥ 6

तस्य जातिविशुद्धस्य परिशुद्धेन कर्मणा ।
कायस्यावयवास्सर्वे रत्नबीजत्वमाययुः ॥ 7

देवानामथ यक्षाणां सिद्धानां पवनाशिनाम् ।
रत्नबीजं स्वयं ग्राह्यमभवत्सुमहत्तदा ॥ 8

तेषां सम्पततां वेगाद्विमलेन विहायसा ।
यद्यत्पपात रत्नानां बीजं कचन किञ्चन ॥ 9

पयोनिधौ सरित्तीरे पर्वते काननेऽपि वा ।
तत्तदा(का)[क]रतां यातं स्थानमाधेयगौरवात् ॥ 10

तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानि च ।
प्रा(भु)[दु]र्भवन्ति रत्नानि तथैव द्विगुणानि च ॥ 11

कुलग्नेषूपपद्यन्ते यानि चोपगतेऽहनि ।
दोषैस्तान्युप(पी)[ची] यन्ते हीयन्ते गुणसम्पदा ॥ 12

परीक्षापरिशुद्धानां रत्नानां पृथिवीभृता (म्) ।
धारणं सम्भृ(तो)[ति] र्वापि कर्तव्यं शुभमिच्छता ॥ 13

वेत्तारो रत्नमूल्यस्य देशकालान्तरानुगाः ।
न तु शास्त्रवशादग्राह्या विद्वद्भिस्ते तु वेत्सिताः ॥ 14

शास्त्रज्ञः कुशलो वाग्मी रत्नानां संपरीक्षकः ।
स एव मूल्यमात्राया वेत्तेति परीकीर्तितः ॥ 15

## ॥ अथ वज्रपरीक्षा ॥

महाप्रभावं विबुधैर्यस्माद्वज्रमुदाहृतम् ।
वज्रपूर्वा परीक्षेयमतोऽस्माभिर्निगद्यते ॥ 16

तस्यास्थिलेशो निपपात येषु
भुवः प्रदेशेषु कथञ्चिदेव ।
वज्राणि वज्रायुधनिर्जिगीषोः
भवन्ति नानाद्युतिमन्ति तेषु ॥ 17

हैममातङ्गसौराष्ट्रपौण्ड्रकालिङ्गकोसलाः ।
(पेण्णा)[वेणा] तटास्ससोपारा वज्रस्याष्टाविहाकराः ॥ 18

श्यामाः पौण्ड्रभवा मतङ्गविषये नात्यन्तपीतप्रभाः
सोपारास्सितसाम्बुमेघसदृशा रक्ताश्च सौराष्ट्रिकाः ।
आताम्रा हिमशैलजाश्शशिनिभा[ः](पेण्णा)[वेणा] तटोत्थास्तथा
कालिङ्गाः कनकावदातरुचयश्शौरीषिकाः कौसलाः ॥ 19

सुस्वच्छं लघु वर्णतश्च गुणवत्पार्श्वेषु सम्यक्समं
रेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्वर्जितम् ।
लोकेऽस्मिन् परमाणुमात्रमपि यद्वज्रं क्वचिज्जायते
तस्मिन्दैवसमाश्रयो ह्यपि तथा तीक्ष्णाग्रधारं यदि ॥ 20

वज्रेषु वर्णयुक्त्या देवानां संपरिग्रहः प्रोक्तः ।
वर्णानां च विभागः कार्यो वर्णाश्रयादेव ॥ 21

असितसितरक्तपिङ्गश्यामाताम्राः स्वभावतो रुचिराः ।
हरिवरुणशक्रहुतवहपितृपतिमरुतां स्वका वर्णाः ॥ 22

विप्रस्य शङ्खकुमुदस्फटिकावदाता
स्यात्क्षत्रियस्य शशबभ्रुविलोचनाभा ।
वैश्यस्य[चारु]कदलीदलसन्निकाशा
शूद्रस्य धौतकरवालसमा(न)[च] दीप्तिः ॥ 23

द्वौ वज्रवर्णौ पृथिवीपतीनां
सद्भिः प्रदिष्टौ युधि सायु[धु]जन्यौ (?) ।
(यस्यां)[यः स्यात्] जपाविद्रुमभङ्गशोणो
यो वा हरिद्रारससन्निकाशः ॥ 24

ईशत्वात्सर्ववर्णानां गुणवत्सार्ववर्णिकम् ।
वामतो धारयेद्राजा नान्ये वर्णाः कथञ्चन ॥ 25

अधरोत्तरवृत्त्या हि यादृक्स्याद्वर्णसङ्करः ।
तादृ(ष्टका)[गुवा] धरो वज्रो वर्णानां मङ्करो मतः ॥ 26

न च वर्णविभागमात्रयुक्त्या
विदुषा वज्रपरिग्रहो विधेयः ।
[सगुणं] गुणसम्पदं प्रसूते
विपरीतं व्यसनोदयस्य हेतुः ॥ 27

एकमपि यस्य शृङ्गं
विघटितमवलोक्यते विशीर्णं वा ।
गुणवदपि तन्न धार्यं
वज्रं श्रेयोऽर्थिभिर्भुवने ॥ 28

स्फुटिताश्रविशीर्णशृङ्गदेशं
मलवर्णैः प्लुषितैरुपेतमध्यम् ।
न हि वज्रभृतोऽपि वज्रमाशु
श्रियमन्याश्रयलालसां न कुर्यात् ॥ 29

यस्यैकदेशे क्षतभावभासो
यद्वा भवेल्लोहितबिन्दुचित्रम् ।
किं तन्न कुर्याद्ध्रियमाणमाशु
स्वच्छन्दमृत्योरपि जीवितान्तम् ॥ 30

कोटयः पार्श्वाणि धाराश्च षडष्टौ द्वादशैव तु ।
उत्तुङ्गसमतीक्ष्णानि वज्रस्य करयोद षट् (?) ॥ 31

षट्कोटिशुद्धममलस्फुटतीक्ष्णधारं
वर्णान्वितं लघु सुपार्श्वमपेतदोषम् ।

इन्द्रायुधांशुविसृतिस्फुरितान्तरिक्ष-
मेवंविधं भुवि भवेत्सुलभं न वज्रम् ॥ 32

तीक्ष्णाग्रं विमलमपेतदोष [जालं]
धत्ते य. प्रयततनुस्सदैव बज्रम् ।
वृद्धिस्तं प्रतिदिनमेति यावदायुः
श्रीसम्पत्सुतधनधान्यगोपशूनाम् ॥ 33

व्यालवह्निविषव्याधितस्कराम्बुभयानि च ।
दूरात्तस्य निवर्तन्ते कर्माण्याथर्वणानि च ॥ 34

यदि वज्रमपेतसर्वदोषं
विभृयाद्विंशतितण्डुलं गु(रूत्ये)[रुत्वे] ।
मणिशास्त्रविदो विदन्ति तस्य
(वि)[द्वि] गुणं रू(प)[प्य] कमग्रमूल्यं....(?) ॥ 35

त्रिभागहीनार्धितदर्धषष्ठ-
त्रयोदशत्रिंशदथार्धभागः ।
अशीतिभागोऽथ तथा शतांश-
... ....प्रदिष्टं............... (?) ॥ 36

द्वाभ्यां तमर्धातिमुपागतस्य
चैकावसानस्य विनिश्चयो यः ।
...........................
.......... ..........(?) ॥ 37

नचापि तण्डुलैरेव वज्राणां धारणक्रमः ।
अष्टाभि(स्सुषपैः)[स्सर्षपै]र्गौरैस्तण्डुलः परिकल्प्यते ॥ 38

यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि ।
रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥ 39

अणुनाऽपि हि दोषेण लक्ष्यलक्षणदूषितम् ।
स्वमूल्याद्दशमं भागं वज्रं प्राप्नोति वा न वा ॥ 40

प्रकटानेकदोषस्य स्वल्पस्समशतोऽपि वा ।
स्वमूल्याच्छतभागोऽपि न वज्रस्य विधीयते ॥ 41

(स्प)[स्पृ]ष्टदोषमलङ्कारे न वज्रं योज्यते बुधैः ।
रत्नानां परिकर्मत्वमूल्यं तस्येष्यते लघु ॥ 42

प्रथ(म)[मं] गुणसम्पदाऽभ्युपेतं
प्रतिबन्धं समुपैति यत्र दोषम् ।
अलमाभरणाय तन्नृपाणां
गुणहीना मणयः प्रदूषणीयाः ॥ 43

नार्या वज्रमधार्यं गुणवदपि सुतप्रवृद्धिमिच्छन्त्या ।
अन्यत्र दीर्घ(चिविट)[चिपुट](त्य)[त्र्य]श्रादिगणैर्विप्रनिर्मुक्तम् ॥ (?) 44

अयसा पुष्यरागेण तथा गोमेदकेन च ।
वैडूर्यस्फटिकाभ्यां च काचैश्चापि पृथग्विधैः ॥ 45

प्रतिरूपाणि कुर्वन्ति वज्राणां कुशला नराः ।
क्षारैर्लेवणशालाभिः कुर्यात्तेषां परीक्षण(:)[म्] ॥ 46

गुरुता सर्वरत्नानां गौरवाधारकारणम् ।
................................ (?) ॥ 47

वज्रैस्तैर्विलिख्यते जातिरातिं विलिखन्ति वज्रकुरुविन्दाः । ?
वज्रे वज्रं विलिखति नान्येन विलिख्यते वज्रम् ॥ 48

॥ इति वज्रपरीक्षा समाप्ता ॥

## ॥ अथ मौक्तिकपरीक्षा ॥

---

द्विपेन्द्रजीमूतवराहशङ्ख-
मत्स्याहिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके
तेषां हि शुक्त्युद्भवमेव भूरि ॥ 1

तस्यैव चैकस्य च मू(ल)[ल्य] मात्रं
निर्दिश्यते न त्वपरस्य जातु ।
वेध्यं तु शुक्त्युद्भवमेव तेषां
शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ॥ 2

त्वक्सारना(शे)[गे]न्द्रतिमिप्रसूतं
यच्छङ्खजं यच्च वराहजं[च] ।
प्रायो[हि] मुक्तानि भवन्ति भामा
पूज्यानि माङ्गल्यतया तथापि ॥ 3

या मौक्तिकानामिह योनयोऽष्टौ
प्रकीर्ति[ता] रत्नविनिश्चयज्ञैः ।
कम्बूद्भवं नेत्रभमं प्रदिष्ट-
मुत्पद्यते यच्च गजेन्द्रकुम्भात् ॥ 4

स्वयोनिमध्यच्छवितुल्यवर्णं
शङ्खाद्बृहत्कोणफलप्रमाणम् ।
उत्पद्यते वारणकुम्भमध्या-
दपीततान्नप्रभया विहीना ॥ 5

ये काम्बवश्शार्ङ्गिमुखावमश-
पूतस्य शङ्खप्रवरस्य गोत्रे ।
मतङ्गजाश्चापि विशुद्धवंशा-
स्ते मौक्तिकानां प्रभवाः प्रदिष्टाः ॥ 6

वराहदंष्ट्राप्रभवं प्रकृष्टं
वराहदंष्ट्राङ्कुरतुल्यवर्णम् ।
क्वचित्कथञ्चिन्नगभूप्रदेशे
प्रजम्बनेन्दूकरणाद्विभक्ते ॥ (?) 7

पाठीनपृष्ठस्य समानवर्णं
मीना सुवृत्तं लघुना(प)[प्य]सूक्ष्मम् ।
उत्पद्यते वारिचराननेषु
मत्स्या हि ते मध्यचराः पयोधेः ॥ 8

`वर्षोपलानां समवर्णशोभं
त्वक्सारपर्व[ण्यपि ये]प्रदिष्ट(म्)[ाः] (?) ।
ते वैणवे दिव्यजनोपभोग्ये
स्थाने प्ररोहन्ति न सार्वभौम(म्)[ः] ॥ 9

भोजागमं नीलविशुद्धवर्णं
प्रमाणसंस्थानगुणैरुपेतम् ।
नितान्तधौतप्रविकम्प्यमान-
त्रिस्त्रिंशधारासमवर्णदीप्ति. ॥ 10

प्रख्यापिरत्नानि धनं श्रियो[वा]
राज्यश्रियं वा हरतीन्दु(राभम्)[शोभम्] ।

भाजो हि नाऽपुण्यकृतो भवन्ति
मुक्ताफलस्यापि शरोद्भवस्य ॥ 11

शुभे मुहूर्ते प्रयतैः प्रयत्ना-
द्रक्षापिधाना सुमहद्भिर्धेया ।
हर्म्योपरिस्थं क्रियते यदात-
ज्जिज्ञासया रत्नवरं विधिज्ञैः ॥ 12

तदा महादुन्दुभिमन्द्रघोषै-
र्विद्युल्लताविस्फुरितान्तरालैः ।
पयोधराकान्ति विलम्बिबिम्बै-
र्घनाघनैराद्रियतेऽन्तरिक्षम ॥ 13

न तं भुजङ्गा न तु यातुधाना
न व्याधयो नाप्युपसर्गदोषाः ।
हिंसन्ति यस्याहिशिरस्समस्तं[स्स्थितं तत्]
मुक्ताफलं तिष्ठति पूज्यमानम् ॥ 14

नाभ्येति मेघप्रभवं धरित्रीं
वियद्गतं ते विबुधा हरन्ति ।
अर्चि.प्ररोहावृतदिग्विभागं
आदित्यवद्दुंष्प्रविभावबिम्बम् ॥ 15

तेजस्तिरस्कृत्य हुताशनेन्दु-
नक्षत्र(का)[ता]राग्रहजं समस्तम् ।
दिवा यथा दीप्तकरस्तथैव
तमोऽवगाढा (स्वपि)[स्वपि] तन्निशासु ॥ 16

विचित्ररत्नद्युतिचारुतोया
चतुस्समुद्राभरणाभिरामा ।
कृत्स्ना नवा स्यादिति निश्चयो मे
[सर्वा]मही तस्य सुवर्णपूर्णा ॥ 17

हीनोऽपि यस्तल्लभते कथञ्चि-
न्निपातयोगान्महतश्शुभस्य ।
सपत्नहीनां स महीं समस्तां
भुनक्ति....तिष्ठति यावदेव ॥ 18

न केवलं तच्छुभकृन्नृपस्य
भाग्यैः प्रजानामपि तस्य जन्म ।
तद्योजनानां परितस्सहस्रं
सर्वाननर्थान्विमुखीकरोति ॥ 19

नक्षत्रमालेव दिवो विशीर्णा
(दा)[द] न्तावली तस्य महासुरस्य ।
विचित्रवर्णेषु विशुद्धवर्णा
पपात पत्युः पयसां पयस्सु ॥ 20

संपूर्णचन्द्रांशुकलापकान्ते-
र्मणिप्रवेकस्य महागुणस्य ।
तच्छुक्तिजस्य स्थितिमाप बीज-
मासां पराह्यन्यभवानि यानि ॥ (?) 21

यस्मिन्प्रदेशेऽम्बुनिधेः पपात
तच्चारु मुक्ताफलरत्नबीजम् ।

तस्मिन् पयस्तोयधरापकीर्णं
शुक्तिस्थितं मौक्तिकतामुपैति ॥ 22

शुक्त्युद्भवं नास्ति निकृष्टवर्णं
प्रमाणसंस्थानगुणैरुपेतम् ।
उत्पद्यते तत्पुनराकरेषु
नैकेषु चाम्भोनिधिसम्भवेषु ॥ 23

सैंहलिकपारलौकिकसौराष्ट्रिकताम्रपर्णिपार(सिकाः)[शवाः] ।
सौवीर (पाण्ड्य)[कौबेर] वाटकहैमा इत्याकराश्चाष्टौ ॥ 24

बहुलस्निग्धा वृत्ता हंसाभाः सिंहलाकराः स्थूलाः ।
ईषत्ताम्राः श्वेतास्तमोवियुक्ताश्च [ताम्राख्याः] ॥ 25

कृष्णाः श्वेताः पीतास्सशर्कराः पारलौकिका विषमाः ।
न स्थूला नात्यल्पा नवनीतनिभाश्च सौराष्ट्राः ॥ 26

ज्योतिष्मन्तश्शुभ्रा गुरवोऽनिमहागुणाश्च पार(सिकाः)[शवाः] ।
लघु झर्झरं दधिनिभं बृहद्द्रिसंस्थानमपि हैमम् ॥ 27

विषमं कृष्णं श्वेतं लघु सौवीरं [कौबेरं] प्रमाणतेजोवत् ।
निम्बफलाकृतिधान्यक(पू)[चू]र्णनिभाः पाण्ड्यवाटकजाः ॥ 28

अतसीकुसुम(ग्याभं)[श्यामं] वैष्णवमैन्द्रं शशाङ्कसङ्काशम् ।
हरिहयनिभश्च वारुणमसितं यमदैवतं भवति ॥ 29

परिणतदाडिमगुलिकागुञ्जाताम्रं च वायुदैवत्यम् ।
निर्धूनमनलकणिकानिभं तथा चैवमाग्नेयम् ॥ 30

चिन्त्या न तस्याकरजा विशेषमूल्ये प्रमाणे च........ ।
.............................यतेन पितातः ॥ 31

नच व्यवस्थात्र गुणागुणेषु सर्वत्र सर्वाकृतयो भवन्ति ।
एकस्य शुक्तिप्रभवस्य दृष्टं मुक्तामणेश्शाणसमुद्धृतस्य ॥ 32

मूल्यं सहस्राणि हि रूपकाणां त्रिभिश्शतैरभ्यधिकानि पञ्च ।
यन्माषका (र्णेनततां) [र्षापणतो]....ततश्च भागद्वयहीनमूल्यम् ॥ 33

यन्माषकांस्त्रीन् बिभृयात्सहस्रे द्वे तस्य मूल्यं परमं प्रदिष्टम् ।
अर्धाधिकौ द्वौ विधृतस्य मूल्यं त्रिभिश्शतैरभ्यधिकं सहस्रम् ॥ 34

द्विमाषकोन्मापितगौरवस्य शतानि चाष्टौ कथितानि मूल्यम् ।
अर्धाधिकं माषकमुन्मितस्य सपञ्चविंशत्रितयं शतानाम् ॥ 35

गुञ्जाश्च षट् धारयतश्शते द्वे मूल्यप्रमाणं परमं प्रदिष्टम् ।
उन्मा(न)[प] कोन्मापितभारमेकशताधिकं विंशतिरेव तस्य ॥ 36

गुञ्जा[श्च] तस्रो विधृतं शतार्धं दशाधिकं वाथ लभेत किञ्चित् ।
गुञ्जाश्च तिस्रो विधृतं शतार्धादर्धं लभेताभ्यधिकं त्रिभिर्वा ॥ 37

अतः परं स्याद्धरणप्रमाणं संख्य.................... ।
त्रयोदशानां धरणं धृतानां गुञ्जेति नाम प्र[वदन्ति तज्ज्ञाः] ॥ 38

उन्मापकोन्मापकृतं शतं स्यान्मूल्यं गुणैस्तस्य समन्वितस्य ।
य............सुपूर्णं धरणं त....चकं वदन्ति तज्ज्ञाः (?) ॥ 39

नवसप्ततिमासु यासु मूल्यं यदि न स्याद्गुणयुक्तितो विहीनम् ।
....................................................................... ॥ 40

त्रिंशद्भिर्धरणं पूर्णं सि[द्ध]....ल्लीति भाष्यते ।?
चत्वारिंशद्भवेत्तस्य परो मूल्यविनिश्चयः ॥ 41

चत्वारिंशद्भवेत्सिद्धं त्र्यंशमूल्यं लभेत तत् ।
षष्टिं नीकरशिष्टस्य मूल्यं तस्य चतुर्दशम् ॥ 42

अशीतिर्नवतिश्चैव कुप्येति.................... ।
........कादशस्याणवच तस्य मूल्यमनुक्रमात् ॥ (?) 43

शतम........र्णार्यं....परीकीर्तितः ।
सप्तपञ्चत्रयञ्चैव तस्य मूल्यं प्रकीर्तितम् ॥ 44

........कमेकं यावद्द्विवर्णेतरणैरहीनम् ।
.......................................... ॥ 45

मूल्येन ताव——————
........ज्यनावृष्टिहतेऽपि देशे ।
सूक्ष्मातिसूक्ष्मोत्त............
तन्मौक्तिकानामिह मूल्यमुक्तम् ॥ 46

तज्जातिमात्रे.............................
........णेरहीनस्य तु तत्प्रदिष्टम् ॥ 46½

तारं वृत्तं गुरु स्निग्धं निर्मलं कोमलं तथा ।
षड्भिर्गुणैः समायुक्तं मौक्तिकं गुणवत्स्मृतम् ॥ 47

सितं प्रमाणवत्स्निग्धगुरुस्वच्छसुनिर्मलम् ।
तेजोऽधिकसुवृत्तं च मौक्तिकं गुणवत्स्मृतम् ॥ 48

प्रमाणवद्गौरवरश्मियुक्तं............सितं सुवृत्तम् ।
समसूक्ष्मवेधव्यके पनिचैवापहन्ति प्रमोदम् । (?)
............यन्मौक्तिकं तद्गुणवत्प्रदिष्टम् ॥ 49

एवं समस्तेन गुणोदयेन
यन्मौक्तिकं योगमुपागतं स्यात् ।
तस्यैव भर्तारमनर्थजात-
मेकं च किञ्चित्समुपैति जातु ॥ 50

ऋजुवेधगुणस्य [मूल्य]कं
गुरुताकान्तिमतोऽस्य निर्मलस्य ।
परिभावितमेतदत्र सद्भिः
यदविद्धन्तु तदर्धमूल्यमाह ॥ 51

पीनकस्य भवेदर्धमनुवृत्तं त्रिभागभाक् ।
विषमन्त्र्यश्रजातीनां मूल्यं षड्भागमादिशेत् ॥ 52

यत्तु चन्द्रांशुसङ्काशमीषन्निम्बफलाकृति ।
मूल्या(त्) च सप्तभागोनमावृतत्वाल्लभेत तत् ॥ 53

अवरूपाणि विस्फोटरेखापङ्काङ्कितानि च ।
अताराणि च यानि स्युः कराकारं वहन्ति च ॥ 54

एकादश प्रभावन्ति शकलाश्लेषितानि च ।
यानि चण्डकवर्णानि कांस्यवर्णानि यानि च ॥ 55

मीननेत्रसवर्णानि ग्रन्थिमन्ति च यानि च ।
प्रमाणेनापि युक्तानां मूल्यं यत्किञ्चिदादिशेत् ॥ 56

श्वेतकाचसमं तारं हैमांशशकयोजितम् ।
रत्नराजिप्रतीवापं मौक्तिकं दैवभूषणम् ॥ 57

एवं सिंहलदेशेषु कुर्वन्ति कुशला नराः ।
एतान्यपि विजानीयान्मौक्तिकानि परीक्षयेत् ॥ 58

यस्मिन् कृत्रिमसन्देहः कचिद्वा मौक्तिके भवेत् ।
कृष्णे सलवणे स्नेहे निशान्तं वासयेज्जले ॥ 59

व्रीहिभिर्मर्दनीयस्स्यात् शुष्कवस्त्रोपवेष्टितम् ।
न याति यत्तु वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥ 60½

॥ इति मौक्तिकपरीक्षा समाप्ता ॥

## ॥ अथ पद्मरागपरीक्षा ॥

दिवाकरस्तस्य महामहिम्नो
महासुरस्योत्तररत्नबीजम् ।
असृग्गृहीत्वा त्वरितं प्रतस्थे
निस्त्रिंशनीलेन नभस्स्थलेन ॥ 1

जेत्रा सुराणां समरेष्वजस्रं
वीर्यावलेपोद्धतमानसेन ।
लङ्काधिपेनार्धपथे समेत्य
स्वर्भानुनेव प्रसभान्निरुद्धम् ॥ 2

तस्सिंहलीचारुनितम्बबिम्ब-
विक्षोभितागाधमहाह्रदायाम् ।
पूगद्रुमच्छन्नतटद्वयायां
मुमोच सूर्यस्सरि(स)[दु] त्तमायाम् ॥ 3

ततःप्रभृति (धा)[सा] गङ्गा तुल्यपुण्यफलोदया ।
नाम्ना रावणगङ्गेति प्रथिमानमुपागता ॥ 4

ततःप्रभृत्येव तु शर्वरीषु (कु)[कू] लानि रत्नैर्निचितानि तस्याः ।
कूलानि कूलप्रकरैरिवान्तर्विभानुसंसक्ततटोपलानि ॥ 5

क्वचित्क्वचिद्व्यापिमणिप्रभाभि-
र्विभाव्यमानानि पयांसि तस्याः ।
सुवर्णनाराचशतैरिवान्त-
र्वे(नि)[न]प्रदीप्तैर्निचितानि भान्ति ॥ 6

तस्यास्तटेषूज्ज्वलचारुरागाः
भवन्ति तोयेषु तु पद्मरागाः

महागुणा ये स्फटिकप्रसूताः
सौगन्धिकोत्थाः कुरुविन्दजाश्च ॥ 7

बन्धूकगुञ्जाशकलेन्द्रशोभाः
जपाशशासृक्समवर्णशोभाः ।
भ्राजिष्णवो दाडिमबीजवर्णा-
स्तथा परे किंशुकपुष्पभासः ॥ 8

सिन्दूररक्तोत्पलकुङ्कुमाभा
लाक्षारसस्यापि समानवर्णाः ।
स(न्दे)[न्ने] पि रागे प्रभया स्वयैव
भवन्ति लक्ष्यस्फुटमध्यभागाः ॥ 9

भानोश्च भासामनुवेधयोग-
मासाद्य रश्मिप्रकरेण दूरे ।
पार्श्वानि सर्वाण्यनुरञ्जयन्ति
गुणोपपन्नाः स्फटिकप्रसूताः ॥ 10

कुसुम्भनीलव्यतिमिश्ररागाः
प्रत्यग्ररक्ताम्बरतुल्यभासः ।
तथा परे चित्रककण्टकारी-
पुष्पत्विषो हिङ्गुलिका(वि)[त्वि] षोऽन्ये ॥ 11

चकोरपुंस्कोकिलसारसानां
नेत्रावभास द्वि[द्यु] त(या)[य] श्च केचित् ।
अन्ये पुनर्नापि विपुष्पितानि
तुल्यत्विषः कोकनदोदराणाम् ॥ 12

प्रभावकाठिन्यगुरुत्वयोगैः
प्रायस्समानां स्फटिकोद्भवानाम् ।
आनीलरक्तोत्पलचारुभासां
सौगन्धिकोत्था मणयो भवन्ति ॥ 13

कामं तु रागः कुरुविन्दजाना
मप्यस्ति यादृग्भवनानि........ ।
......................हला भवन्ति
प्रभाववन्तोऽपि न तैस्समस्तैः ॥ 14

ये तु रावणगङ्गायां जायन्ते कुरुविन्दजाः ।
पद्मरागायनं........बिभ्राणा न स्फुटार्चिषः ॥ 15

वर्णानुयायिनस्तेषा (म)[मा] न्ध्रदेशे तथा परे ।
जायन्ते ते तु यत्किञ्चिन्मूल्यं लेशमवाप्नुयुः ॥ 16

तथैव स्फटिकोत्थानां देशे तुम्बुरुसञ्चिते ।
समागमात्प्रजायन्ते स्वल्पमूल्या हि ते स्मृताः ॥ 17

वर्णाधिक्यं प्रयत्नेन विद्वांस्तानुपलक्षयेत् । 17½

कालपुरोद्भवसिंहलतुम्बुरुदेशोत्थमुत्तम(लेया)[मं तु स्यात् ] ।
श्रीपूर्ण(यश्च)[जाश्च] सदृशा विजातयः पद्मरागाणाम् ॥ 18

तुषोपसर्गान्कलशाभिधान-
माताम्रभावादपि तुम्बुरूत्थम् ।
कण्र्यातत्तं सिंहलदेशजातं
मुक्ताभिधानं नभसास्य भावम् ॥ 19

श्रीपूर्णजं दीप्तिनिराकृतां (तं) च
द्विजातिलिङ्गाश्रय एष भेदः ।
स्नेहार्द्रदेहो लघुता गुरुत्वं
विजातिलिङ्गं खलु सार्वजन्यम् ॥ 20

दोषोपसृष्टं मणिमप्रबोधात्
बिभर्ति यः कञ्चन किञ्चिदेव ।
तत्रत्यदुःखामयबुद्धिवित्त-
नाशादयो दोषगुणा भजन्ते ॥ 21

ये शर्कराच्छिद्रमलोपदिग्धाः
प्रभाविमुक्ताः परुषा विवर्णाः ।
न ते प्रशस्ता मणयो भवन्ति
समासतो जातिगुणैरुपेताः ॥ 22

यस्ताम्रतां पुष्यति पद्मरागो
यो वा तुषाणामिव पूर्णमध्यः ।
स्नेहप्रदिग्धश्च विभाति यो वा
यो वा प्रमृष्ट प्रजहाति दीप्तिम् ॥ 23

आक्रान्तमूर्च्छो च तथाङ्गुलीभ्यां
य कालिकां पार्श्वगतां बिभर्ति ।
सम्प्राप्य चेत्क्षेत्रतरङ्गवृत्त
बिभर्ति यः सर्वगतामतीव ॥ 24

तुल्यप्रमाणस्य च तुल्यजाते-
र्यो . [वा]गु(रू त्वे)[रुत्वे] न भवे(त)[त्तु] तुल्यः ।

प्राप्यानि रत्नाकारमध्यदेश-
जातिं बुधो जातिनयेन पश्येत् ॥ 25

जातस्य सर्वस्य मणेर्न जातु
विजातयः सन्ति समं न भासः ।
तथापि नानाकरणार्थमेषां
भेदप्रकारोपनयं प्रदिष्टम् ॥ 26

अप्रणश्यति सन्देहे शाणायां तत् परीक्षयेत् ।
स्वजातिकासमुत्थेन विलिखेद्वा परस्परम् ॥ 27

वज्रं कुरुविन्दं वा विरच्यान्येन केनचित् ।
न शक्यं लेखनं कर्तुं पद्मरागेन्द्रनीलयोः ॥ 28

गुणोपपन्नेन सहावबन्धो
मणिस्तु धार्योऽपि........य जातयः ।
न कौस्तुभेनापि सहावबन्धं
विद्धा विजातिं बिभृयात्कदाचित् ॥ 29

चण्डाल एकोऽपि यथा द्विजातीन्
समेत्य भूरीनुप(यन्त्य)[यात्य] यत्नात् ।
तथा मणीन्भूरिगुणोपपन्नान्
शक्नोति विप्लावयि(ता)[तुं] (द्वि)[वि]जातिः ॥ 30

गुणशतमपि दोषः कश्चिदेको विवृद्धः
क्षपयति यदि न स्यात्तद्विरोधी गुणोऽन्यः ।
घटशतमपि पूर्णं पञ्चगव्येन शक्त्या
मलिनयति सुराया बिन्दुरेकोऽपि सर्वम् ॥ 31

॥ इति पद्मरागपरीक्षा समाप्ता ॥

## ॥ अथ मरतकपरीक्षा ॥

दानवाधिपतेर्वित्तमादाय भुजगाधिपः ।
द्विधा कुर्वन्निव व्योम त्वरितं वासुकिर्ययौ ॥ 1

स तदास्यशिरोरत्नप्रभादीप्ते नभोऽम्बुधौ ।
रजतः सुमहानेक क[ख]ण्डसेतुरिवाबभौ ॥ (?) 2

ततः (पक्षपिता तेन) [पक्षवितानेन] संहरन्निव रोदसी ।
गरुत्मान् गगने तस्य तद्धर्तुमुपचक्रमे ॥ 3

सहसैव मुमोच तत्फणीन्द्रः
स्वरसाभ्यक्ततुरुष्कपादपायाम् ।
नलिनीवनगन्धवासितायां
धरणीन्द्रस्य गिरेरुपत्यकायाम् ॥ 4

तस्मिन्पपात समनन्तरकारकाल-
मेतद्वरालयमतीत्य रमासमीपे ।
स्थानं स्थितेरुपपयोनिधितीरलेखं
तत्प्रत्य[या] न्मरतकाकरतां जगाम ॥ 5

तत्र........कठोर........कण्ठशिरीषपुष्प-
खद्योतपृष्ठनवशाद्वलशैवलाभाः ।
कार्ष्णीरसस्य (क)[च] भुजङ्गभुगग्रपिञ्छ-
तुल्यत्विषो मरतका मणयो भवन्ति ॥ 6

तत्रैव किञ्चित्पतितं स वित्तं
जग्राह खे (समपति)[सपदि संप्र]गतो गरुत्मान् ।

मूर्च्छापरीतस्सहसैव नासा-
रन्ध्रद्वयेन प्रमुमोच चाशु ॥ (?) 7

यद्यत्र भोगीन्द्रभुजा (द्वि)वि मुक्तं
पपात वित्तं दितिजेश्वरस्य ।

तस्याकरस्यातितरां स देशो
दुःखोपलभ्यश्च गुणैश्च मुक्तः ॥ 8

यस्मिन्मरतकस्थाने यत्किञ्चिदुपजायते ।
सर्वं च विषवे(शा)[गा] नां प्रशमाय प्रकल्पते ॥ 9

सर्वमन्त्रौषधिगुणैर्यन्न शक्यं चिकित्सितुम् ।
महाहिदंष्ट्राप्रभवं विषं तत्तेन शाम्यति ॥ 10

अन्यदप्याकरे तस्मिन् यद्दोषैः परिवर्जितम् ।
जायते तत्पवित्राय चोत्तमं सर्वतो हितम् ॥ 11

अत्यन्तहरितवर्णं सुकुमारा—ष्टूतानजटिलं च ।
काञ्चनपूर्णैरस्तं सुपूर्णमिव लक्ष्यते यच्च ॥ 12

संस्थानगुणैर्युक्तं समरागं गौरवेण चाहीनम् ।
सवितुः करसंस्पर्शाच्छुध्यति यच्चाश्रयं दीप्त्या ॥ 13

भित्त्वा च हरिमो वयस्यान्तरभेदसमभवा दीप्तिः । (?)
अचिरप्रभाप्रभावा नवशाड्वलसन्निभा भाति ॥ 14

यच्च मनसः प्रसादं विदधाति निरीक्षमाणमतिमात्रम् ।
तन्मरतकं महागुणमिति रत्नविदां मनोवृत्तिः ॥ 15

वर्णस्यातिमहत्त्वे यदपि च सुस्वच्छकरणपरीवारः ।
सान्द्रं देहविशुद्धं कोलम्बहलप्रभादिग्धम् ॥ 16

वर्णोद्भवाय कान्त्या सान्द्राकारावभासमायाति ।
तदपि च गुणवत्संज्ञामाम्नोति न यादृशी पूर्वम् ॥ 17

शबरं जरठं मलिनं रूक्षं पाषाणशर्कराभिन्नम् ।
श्लिष्टं च शिलाजतुका मरकतमेवंविधं विगुणम् ॥ 18

यत्सन्धिश्लेषितं रत्नं अन्यन्मरतकादृते ।
श्रेयस्करैर्न तद्धार्यं विक्रेतव्यं कथञ्चन ॥ 19

भल्लातकः पुत्रिका च तद्वर्णस्यानुयायिनः ।
मणेर्मरतकस्यैते लक्षणीया विजातय ॥ 20

क्षौमोर्णवाससा स्पृष्टा दीप्तिं त्यजति पुत्रिका ।
छेदनेनैव काचस्य शक्या कर्तुं विभावना ॥ 21

कस्य चिदनेकरूपैर्मरतकमनुगच्छतो विगुणयोगैः ।
भल्लातकस्य नान्तर्वैशद्यमुपैति वर्णस्य ॥ 22

स्नानाचमनजप्येषु रत्नमन्त्रक्रिया(नि)[वि]धौ ।
ददद्भिर्गोहिरण्यादि कुर्वद्भिस्साधनानि च ॥ 23

देवाग्निगुरुपूजासु(चित्राव)[पित्रोर] तिथिपूजने ।
बाध्यमानैश्च विविधैर्दोषजातैर्विषोद्भवैः ॥ 24

दोषैर्मुक्तं गुणैर्युक्तं काञ्चनप्रतियोजितम् ।
सङ्ग्रामं प्रविशद्भिर्वा धार्यं मरतकं युतम् ॥ 25

यथा च पद्मरागाणां दोषैर्मूल्यं प्रहीयते ।
तथास्याभ्यधिका हानिर्दोषैर्मरतकस्य च ॥ 26

हरितममलमच्छं निर्व्रणं नित्यरागं
गुरुतरचतुरश्रं कोमलं मुद्गवर्णम् ।

हृदयनयनकान्तं तेजसा चैव युक्तं
मरतकमिति तज्ज्ञैः प्रेक्ष्यते लक्ष्यमूलम् ॥ 27

वज्रं विहाय रत्नानां मणयो ये विजातयः ।
तेषामप्रतिबद्धानां भा भवत्यूर्ध्वगामिनी ॥ 28

ऋज्वागतत्वात्केषाञ्चित् कथञ्चिदुपजायते ।
तिर्यगालो(च्य)[क्य] मानानां सापि यैव विनश्यति ॥ 29

॥ इति मरतकपरीक्षा समाप्ता ॥

---

## ॥ अथ इन्द्रनीलपरीक्षा ॥

तत्रैव सिंहलवधूकरपल्लवाग्र-
व्यालूनलोललवलीमुकुलप्रवालैः ।
देशे पपात दितिजस्य नितान्तनील-
(लो(त्रा)[ग्रा]कभिन्नकेनकवनप्रतिबद्धरेखा) ॥
(सान्द्रेन्द्रनीलमणि—रता बभूव) ॥ १ 1

आलासिताब्जहलमृद्धसनाद्रिपृष्ठे
शार्ङ्गायुधाङ्गगरकण्ठकलापपुष्पैः ।
शुक्लेतरैश्च कुसुमैर्गिरिकर्णिकाया-
स्तस्यां भवन्ति मणयस्सदृशावभासाः ॥ 2

अन्ये प्रसन्नपयसां———निधातु-
रम्बु(द्वि)[त्वि]षो गिरिशकण्ठनिभास्तथाऽन्ये ।
नीलीरसप्रभवबन्युदसन्निभाश्च
केचित्तथा समदकोकिलकण्ठभासः ॥ 3

एवंप्रकारा [बहवः] स्पष्टवर्ण[वि] शोभिनः ।
जायन्ते मणयस्तत्र इन्द्रनीला महागुणाः ॥ 4

(मु)[? मृ]त्पाषाणसिरारन्ध्रकरत्रपसुसंयुताः ।
अभ्रकोऽल्पदलच्छायावर्णदोषैश्च दूषिताः ॥ 5

यस्मिन्नेवं पव्रजन्ते मणयः खलु भूरियम् ।
शास्त्रसंबोधितधियः तत्र[शंसन्ति]सूरयः ॥ 6

धार्यमाणस्य ये दृष्टाः पद्मराग[मणेर्गुणाः] ।
धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः ॥ 7

यथा वा पद्मरागाणां जातकृत्रितयं भवेत् ।
इन्द्रनीलेष्वपि तथा द्रष्टव्यमविशेषतः ॥ 8

परीक्षाप्रत्यया ये वै पद्मरागपरीक्षणे ।
तथैव प्रत्यया हि स्युरिन्द्रनीलमणेरपि ॥ 9

यावन्तश्च सहैतानि पद्मरागप्रयोगतः ।
इन्द्रनीलमणिस्तस्मात् सहैतानि महत्तरम् ॥ 10

तथापि न परीक्षार्थं गुणानां वा विशुद्धये ।
मणिरत्नैः समाधेयः कदाचिदपि कश्चन ॥ 11

अग्निमात्रपरिज्ञानाद्दाहदोषविदूषितः ।
सोऽनर्थाय भवेद्भर्तुः कर्तु कारयितुस्तथा ॥ 12

कायोपलकरुव्याणां समाश्च स्फटिकादयः ।
इन्द्रनीलमणिच्छायासदृशास्तु विजातयः ॥ 13

एतेन सदृशमणिनेन्द्रनीलेन गुरुभावकठिनभावावेतेषां दृश्य[श्ये[ते ।
कचात्यथावदुत्तरविवर्धमानो विशेषेणेन्द्रनीलो यथ........कश्चित्

विभत्यातिाम्रवर्णताम्रवर्णताम् । (?)
लक्षणीयौ तथा ताम्रौ करपूरौ पलावुभौ ।
यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ॥ 14

तमिन्द्रनीलमित्याहुर्महार्घं भुवि दुर्लभम् ।
यस्तु वर्णस्य भूरित्वात् क्षीरे शतगुणे स्थितम् ॥ 15

नीलतां तु नयेत्सर्वं स महानील उच्यते ।
अनीलः पाण्डुपाषाणः पुष्यरागोऽभिधीयते ॥ 16

तमेव लोहितं पीतं प्राहुः कोरण्डकं बुधाः ।
आलोहितमपीतं तु स्वच्छकाषायकं विदुः ॥ 17

इन्द्रनीलं सुनीलत्वात् पद्मरागस्तु लोहितः ।
आनीलश्शुक्लसिद्धश्च मणिस्सोमालकः स्मृतः ॥ 18

एष वर्णप्रकारस्तु वर्णविद्भिरुदाहृतः ॥ 18½

यत्पद्मरागस्य महागुणस्य
मूल्यं भवेन्माषकमुन्मितस्य ।
तदिन्द्रनीलस्य महागुणस्य
सुवर्णसंख्यातुलितस्य मूल्यम् ॥ 19

इन्द्रनीलमहानीलपुष्यरागपरीक्षणम् ।
कोरण्डकाख्यकाषायसोमालकसमन्वितम् ॥ 20½

इति इन्द्रनीलपरीक्षा समाप्ता ॥

---

## ॥ अथ वैडूर्यपरीक्षा ॥

कल्पान्तकालक्षुभिताम्बुराशि-
निर्ह्रादकल्पाद्दितिजेन्द्र(वा)[ना]दात् ।
वैडूर्यमुत्पन्नमनेकवर्णं
शोभाभिरामद्युति रत्नवर्यम् ॥ 1

अविदूरे विडूर्यस्य गिरेरुत्तुङ्गरोधसः ।
कोगचोलिकसीमान्ते मणेस्तस्याकरोऽभवत् ॥ 2

तत्प्रत्ययसमुत्थत्वादाकरस्य महागुणः ।
भूमौ रत्नार्पिततलो लोके स प्रथितोऽभवत् ॥ 3

तस्यैव दानवपतेर्निनदानुरूप-
प्रावृट्पयोधररवाद्वसुधां विभिद्य ।
वैडूर्यरत्नमणयो विविधावभासो
वह्निस्फुलिङ्गनिवहा इव निष्पतन्ति ॥ 4

पद्मरागमुपादाय मणिराशि(मियि)[रिह]क्षितौ ।
सर्वास्ता वर्णतो भाभिर्वैडूर्यमनुगच्छति ॥ (?) 5

तेषां प्रधाने शशिकण्ठनीलो
यो वा भवेद्वेत्रदलप्रकाशः ।
माषस्य पत्रान्तसमद्युतिर्वा
नान्ये प्रशस्ता मणिविद्भिरुक्ताः ॥ 6

गिरिकाचशैशुपालककाचस्फटिकाश्च धूमनिर्भिन्नाः ।
वैडूर्याणामेते विजातयस्सन्निभास्सन्ति ॥ 7

लाक्षायोगात्काचा लघु(पालात्) [भावात्] शैशुपालकं चैव ।
विद्या[त्] गिरिंच दीप्त्या स्फटिकं वर्णोज्ज्वलेनैव ॥ 8

यदिन्द्रनीलस्य महागुणस्य
सुवर्णसंख्याकलितस्य मूल्यम् ।
तदेव वैडूर्यमणेः प्रदिष्टं
पलद्वयोन्मापितगौरवस्य ॥ 9

सुखोपलक्ष्यो हि सदा विचार्यो
विधिस्त्वयं शास्त्रविदादरेण ।
स्नेहप्रदेहो मृदुता लघुत्वं
व्रजन्ति लिङ्गं खलु सार्वजात्यम् ॥ 10

उपेतोऽपि हि वर्णेन दीप्ति(गो)[शो] भाविवर्जितः ।
महार्घं न मणिर्याति प्रभावाच्च प्रहीयते ॥ 11

कुशलः....................प्रैज्यमानाः
प्रतिबद्धाः प्रतिसर्यं प्रतियोगैः ।(?)
गुणदोषसमुद्भवं लभन्ते
मणयो मूल्यमिहाहुरार्यलोकाः ॥ 12

क्रमशः समतीत्य सर्वशाणाः
प्रतिबद्धाः कुशलेन होमकर्त्रा ।
यदि नाम भवन्ति दोषहीना
मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥ 13

आकरात्समतीतानामुदधेस्तीरसन्निधौ ।
मूल्यमेतन्मणीनां तु न तु सर्वत्र भूतले ॥ 14

सुवर्णं मनुना प्रोक्तं पूर्वषोडशमाषका ।
तस्य सप्ततिभागस्य संज्ञारूपकमिष्यते ॥ 15

त्रयः कुलुत्था गुञ्जा तु पञ्चगुञ्जास्तु माषकाः ।
गुञ्जाद्वात्रिंशमित्याहुर्धरणं रत्नकोविदाः ॥ 16

॥ इति वैडूर्यपरीक्षा समाप्ता ॥

---

## ॥ अथ कर्केतनपरीक्षा ॥

वायुर्वसां दैत्यपतेर्गृहीत्वा
चिक्षेप सम्यग्यवने प्रहृष्टम् ।
तत्र प्रसूता मणयः प्रसन्नाः
कर्केतनाः पूज्यतमा भवन्ति ॥ 1

वर्णेन तद्रुधिरसान्द्रमधुप्रकाश-
माताम्रपीतकनकज्वलितं विभाति ।
प्रत्यग्रसूर्यकिरणज्वलनप्रकाशं
सन्ध्यारुणामलमनोज्ञविशुद्धवर्णम् ॥ 2

कुलसुतधनधान्यवृद्धिसौख्यं
विषगतशोकमपाकरोति चाशु ।
कनकशतमपीष्टमस्य मूल्यं
कलुषविनीलविवर्जितस्य तस्य ॥ 3

॥ इति कर्केतनपरीक्षा ॥

---

## ॥ अथ पुलकपरीक्षा ॥

पुण्येषु पर्वतवनेषु च निम्नगासु
स्थानान्तरेषु च तथोच्चतरेषु ग(ता)[त्वा] ।
संस्थापिता नरवरा हि गजैः प्रकाशं
सम्पूज्य दानवपतेः प्रथितप्रदेशे ॥ 1

दशार्णतारापुरमेखलादौ गुञ्जादलद्राक्षमृणालवर्णा ।
.......................................... ॥ 2

बिल्वार्कशुभ्रकदलीकसमानगात्रा-
श्चत्वार एव पुलकाः खलु ते प्रसूताः ।
शङ्खाम्बुजध्वजभुजङ्गविचित्रिताङ्गाः
................................ ॥ 3

*सूत्रैरुपेता(?) [पञ्च]विंशतितत्त्वानि पुरुषः प्रकृतेः (पृथक्) [परम् ] ।
जानतो योगसिद्धिस्स्याद्योग[दोष] क्षयो भवेत् ॥ 1

पञ्चविंशतितत्त्वानि पुरुषः प्रकृ(ते)[ति] महान् ।
अहङ्कारश्च तन्मात्रा विकाराश्चापि षोडश ॥ 2

(पञ्च)[महा] भूतानि चेत्येवमृषिणैव सुविस्तृतम् ।
ज्ञानमात्रेण मुक्तिः स्यादि(ति चास्यैव)[त्यालस्यस्य)लक्षणम् ॥ 3

ज्ञानिनोऽपि भवत्येव दोषैर्बुद्धि(भयं)[भ्रमः] क्वचित् ।
गुरूपदिष्टविद्यातो नष्टाविद्योऽपि पूरुषः ॥ 4

---

* अत्र पुलकरुधिराक्षस्फटिकनिरूपणभागे ग्रन्थपात इव लक्ष्यते । पञ्चविंशति-तत्वानीत्यारभ्य, तत्राविद्यैव कारणम् , इत्यन्तो भागः प्रकृतासंबद्धो लक्ष्यते । आदर्शे उपलंभान्मुद्रितः ॥

देहदर्पणदोषांस्तु योगेनैव विनाशयेत ।
सम्यग्ज्ञातो रसो यद्वद्गुलादेर्नानुभूयते ॥ 5

पित्तज्वरयुतैस्तस्माद्दोषानेव विनाशयेत् ।
गुरूपदिष्टविद्यस्य विरक्तस्य नरस्य तु ॥ 6

दोषक्षयकरस्तस्मा(द्दोषा)[द्योगा] दन्यो न विद्यते ।
अविद्योपात्तकर्तृत्वात्का(म्यन्) [मात्] कर्माणि कुर्वते ॥ 7

ततः कर्मविपाकेन जात्यायुर्भोगसंभवः ।
पञ्च क्लेशास्त्वविद्या च रागद्वेषौ तदुद्भवौ ॥ 8

अस्मिताभिनिवेशौ च (य)[त] त्राविद्यैव कारणम् । 8½
प्रकाशजलशुद्धाख्यमुत्पन्नस्फटिकं ततः ॥

(हस्त्का)[धृत्वा] च शङ्खं (प)[ध]वलं किञ्चिद्वर्णान्वितं शुभम् ॥ 4
न तुल्यसारं नृणां च तथैवाशुभसाधनम् ।

सम्यक्कृतं शिल्पविदा किञ्चिन्मूल्यं भवेत्तु तत् ॥ 5

॥ इति स्फटिकपरीक्षा ॥

---

## ॥ अथ विद्रुमपरीक्षा ॥

मीनपक्षोज्ज्वलो नानाविद्रुमस्सागरे किल ।
उमासमीपे पतितो जलमध्ये प्रतिष्ठितः ॥ 1

आदाय मांसं यम उग्रकर्मा
तस्यामरारेर्विससर्ज तस्मिन् ।

तत्र प्रधानं शशलोहिताभं
गुञ्जाजपापुष्पनिभं प्रसूतम् ॥ 2

स्वल्पीयकं सुखवदागमरोमतं च
स्थानानि तेष्वपि समं सुलभं सुरागम् ।

अन्यत्र जातं न तु तत्प्रधानं
मूल्यं भवेच्छिल्पविशेषितानाम् ॥ 3

प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत् ।
धनधान्यकरं (आ)[ना] गविषादिभयनाशनम् ॥ 4

तत्र पुरा इह सूनुना समासोक्ति (?) ।
मणिशास्त्राणां (मरुता)[महतां] बुद्धभटेनाक्षयेणेयम् ॥

इति वज्रमौक्तिकपद्मरागमरतकेन्द्रनीलवैडूर्यकर्केतनपुलकरुधिराक्षस्फटिकविद्रुमाणां बीजाङ्कुरगुणदोषकृत्रिममूल्यपरीक्षा, धारयितुः दोषगुणानां च, महन्नियोगेन विस्तरताऽसौ बुद्धभटेन निर्दिष्टा (?) ॥

॥ इति बुद्धभटीयं नाम रत्नशास्त्रं
समाप्तम् ॥

———